॥ रुद्राक्षजाबालोपनिषत् ॥

रुद्राक्षोपनिषद्वेद्यं महारुद्रतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तशिवमात्रपदं भजे ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः
श्रोत्रमथो बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं
माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणम-
स्त्वनिराकरणं मेस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि
सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथ हैनं कालाग्निरुद्रं भुसुण्डः पप्रच्छ कथं
रुद्राक्षोत्पत्तिः । तद्धारणात्किं फलमिति । तं होवाच
भगवान्कालाग्निरुद्रः । त्रिपुरवधार्थमहं निमीलिताक्षोऽभवम् ।
तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षा जाताः ।
सर्वानुग्रहार्थाय तेषां नामोच्चारणमात्रेण
दशगोप्रदानफलं दर्शनस्पर्शनाभ्यां द्विगुणं
फलमत ऊर्ध्वं वक्तुं न शक्नोमि । तत्रैते श्लोका भवन्ति ।
कस्मिंस्थितं तु किं नाम कथं वा धार्यते नरैः ।
कतिभेदमुखान्यत्र कैर्मन्त्रैर्धार्यते कथम् ॥ १॥

दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया ।
भूमावक्षिपुटाभ्यां तु पतिता जलबिन्दवः ॥ २॥

तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः ।
स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात् ॥ ३॥

भक्तानां धारणात्पापं दिवारात्रिकृतं हरेत् ।
लक्षं तु दर्शनात्पुण्यं कोटिस्तद्धारणाद्भवेत् ॥ ४॥

तस्य कोटिशतं पुण्यं लभते धारणान्नरः ।
लक्षकोटिसहस्राणि लक्षकोटिशतानि च ॥ ५॥

तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात् ।
धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम् ॥ ६॥

बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः ।
अधमं चणमात्रं स्यात्प्रक्रियैषा मयोच्यते ॥ ७॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया ।
वृथा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥ ८॥

श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।
पीतास्तु वैश्या विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ॥ ९॥

ब्राह्मणो बिभृयाच्छ्वेतात्रक्तात्राजा तु धारयेत् ।
पीतान्वैश्यस्तु बिभृयात्कृष्णाञ्छूद्रस्तु धारयेत् ॥ १०॥

समाः स्निग्धा दृढाः स्थूलाः कण्टकैः संयुताः शुभाः ।
कृमिदष्टं भिन्नभिन्नं कण्टकैर्हीनमेव च ॥ ११॥

व्रणयुक्तमयुक्तं च षड्रुद्राक्षाणि वर्जयेत् ।
स्वयमेव कृतं द्वारं रुद्राक्षं स्यादिहोत्तमम् ॥ १२॥

यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।
समान्स्निग्धान्दृढान्स्थूलान्क्षौमसूत्रेण धारयेत् ॥ १३॥

सर्वगात्रेण सौम्येन सामान्यानि विचक्षणः ।
निकषे हेमरेखाभा यस्य रेखा प्रदृश्यते ॥ १४॥

तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजकैः ।
शिखायामेकरुद्राक्षं त्रिशतं शिरसा वहेत् ॥ १५॥

षट्त्रिंशतं गले दध्यात्बाहोः षोडशषोडश ।
मणिबन्धे द्वादशैव स्कन्धे पञ्चशतं वहेत् ॥ १६॥

अष्टोत्तरशतैर्मालामुपवीतं प्रकल्पयेत् ।
द्विसरं त्रिसरं वापि सराणां पञ्चकं तथा ॥ १७॥

सराणां सप्तकं वापि बिभृयात्कण्ठदेशतः ।
मुकुटे कुण्डले चैव कर्णिकाहारकेऽपि वा ॥ १८॥

केयूरकटके सूत्रं कुक्षिबन्धे विशेषतः ।
सुप्ते पीते सदाकालं रुद्राक्षं धारयेन्नरः ॥ १९॥

त्रिशतं त्वधमं पञ्चशतं मध्यममुच्यते ।

सहस्रमुत्तमं प्रोक्तमेवं भेदेन धारयेत् ॥ २०॥

शिरसीशानमन्त्रेण कण्ठे तत्पुरुषेण तु ।
अघोरेण गले धार्यं तेनैव हृदयेऽपि च ॥ २१॥

अघोरबीजमन्त्रेण करयोर्धारयेत्सुधीः ।
पञ्चाशदक्षग्रथितान्व्योमव्याप्यपि चोदरे ॥ २२॥

पञ्च ब्रह्मभिरङ्गैश्च त्रिमाला पञ्च सप्त च ।
ग्रथित्वा मूलमन्त्रेण सर्वाण्यक्षाणि धारयेत् ॥ २३॥

अथ हैनं भगवन्तं कालाग्निरुद्रं भुसुन्डः पप्रच्छ
रुद्राक्षाणां भेदेन यदक्षं यत्स्वरूपं यत्फलमिति ।
तत्स्वरूपं मुखयुक्तमरिष्टनिरसनं कामाभीष्टफलं
ब्रूहीति होवाच । तत्रैते श्लोका भवन्ति ॥

एकवक्त्रं तु रुद्राक्षं परतत्त्वस्वरूपकम् ।
तद्धारणात्परे तत्त्वे लीयते विजितेन्द्रियः ॥ १॥

द्विवक्त्रं तु मुनिश्रेष्ठ चार्धनारीश्वरात्मकम् ।
धारणादर्धनारीशः प्रीयते तस्य नित्यशः ॥ २॥

त्रिमुखं चैव रुद्राक्षमग्नित्रयस्वरूपकम् ।
तद्धारणाच्च हुतभुक्तस्य तुष्यति नित्यदा ॥ ३॥

चतुर्मुखं तु रुद्राक्षं चतुर्वक्त्रस्वरूपकम् ।
तद्धारणाच्चतुर्वक्त्रः प्रीयते तस्य नित्यदा ॥ ४॥

पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् ।
पञ्चवक्त्रः स्वयं ब्रह्म पुंहत्यां च व्यपोहति ॥ ५॥

षड्वक्त्रमपि रुद्राक्षं कार्तिकेयाधिदैवतम् ।
तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ६॥

मतिविज्ञानसम्पत्तिशुद्धये धारयेत्सुधीः ।
विनायकाधिदैवं च प्रवदन्ति मनीषिणः ॥ ७॥

सप्तवक्त्रं तु रुद्राक्षं सप्तमाधिदैवतम् ।

तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ८॥

महती ज्ञानसम्पत्तिः शुचिर्धारणतः सदा ।
अष्टवक्त्रं तु रुद्राक्षमष्टमात्राधिदैवतम् ॥ ९॥

वस्वष्टकप्रियं चैव गङ्गाप्रीतिकरं तथा ।
तद्धारणादिमे प्रीता भवेयुः सत्यवादिनः ॥ १०॥

नववक्त्रं तु रुद्राक्षं नवशक्त्यधिदैवतम् ।
तस्य धारणमात्रेण प्रीयन्ते नवशक्तयः ॥ ११॥

दशवक्त्रं तु रुद्राक्षं यमदैवत्यमीरितम् ।
दर्शनाच्छान्तिजनकं धारणान्नात्र संशयः ॥ १२॥

एकादशमुखं त्वक्षं रुद्रैकादशदैवतम् ।
तदिदं दैवतं प्राहुः सदा सौभाग्यवर्धनम् ॥ १३॥

रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ।
द्वादशादित्यरूपं च बिभर्त्येव हि तत्परम् ॥ १४॥

त्रयोदशमुखं त्वक्षं कामदं सिद्धिदं शुभम् ।
तस्य धारणमात्रेण कामदेवः प्रसीदति ॥ १५॥

चतुर्दशमुखं चाक्षं रुद्रनेत्रसमुद्भवम् ।
सर्वव्याधिहरं चैव सर्वदारोग्यमाप्नुयात् ॥ १६॥

मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च ।
श्लेष्मातकं विड्वराहमभक्ष्यं वर्जयेन्नरः ॥ १७॥

ग्रहणे विषुवे चैवमयने संक्रमेऽपि च ।
दर्शेषु पूर्णमासे च पूर्णेषु दिवसेषु च ।
रुद्राक्षधारणात्सद्यः सर्वपापैः प्रमुच्यते ॥ १८॥

रुद्राक्षमूलं तद्ब्रह्मा तन्नालं विष्णुरेव च ।
तन्मुखं रुद्र इत्याहुस्तद्बिन्दुः सर्वदेवताः ॥ १९॥ इति ॥

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि
भगवन्रुद्राक्षधारणविधिम् । तस्मिन्समये निदाघ-

जडभरतदत्तात्रेयकात्यायनभरद्वाजकपिलवसिष्ठ-
पिप्पलादादयश्च कालाग्निरुद्रं परिसमेत्योचुः । अथ
कालाग्निरुद्रः किमर्थं भवतामागमनमिति होवाच ।
रुद्राक्षधारणविधिं वै सर्वे श्रोतुमिच्छामह इति । अथ
कालाग्निरुद्रः प्रोवाच । रुद्रस्य नयनादुत्पन्ना रुद्राक्षा
इति लोके ख्यायन्ते । अथ सदाशिवः संहारकाले संहारं
कृत्वा संहाराक्षं मुकुलीकरोति । तन्नयनाज्जाता रुद्राक्षा
इति होवाच । तस्माद्रुद्राक्षत्वमिति कालाग्निरुद्रः प्रोवाच ।
तद्रुद्राक्षे वाग्विषये कृते दशगोप्रदानेन यत्फलमवाप्नोति
तत्फलमश्नुते । स एष भस्मज्योती रुद्राक्ष इति । तद्रुद्राक्षं
करेण स्पृष्ट्वा धारणमात्रेण द्विसहस्रगोप्रदानफलं
भवति । तद्रुद्राक्षे कर्णयोर्धार्यमाणे एकादशसहस्रगोप्रदानफलं
भवति । एकादशरुद्रत्वं च गच्छति । तद्रुद्राक्षे शिरसि
धार्यमाणे कोटिगोप्रदानफलं भवति । एतेषां स्थानानां
कर्णयोः फलं वक्तुं न शक्यमिति होवाच । य इमां रुद्राक्षजाबालोपनिषदं
नित्यमधीते बालो वा युवा वा वेद स महान्भवति । स गुरुः सर्वेषां
मन्त्राणामुपदेष्टा भवति एतैरेव होमं कुर्यात् । एतैरेवार्चनम् ।
तथा रक्षोघ्नं मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ
शिखायां वा बध्नीत । सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते ।
तस्माच्छ्रद्धया यां काञ्चिद्गां दद्यात्सा दक्षिणा भवति ।
य इमामुपनिषदं ब्राह्मणः सायमधीयानो दिवसकृतं पापं
नाशयति । मध्याह्नेऽधीयानः षड्जन्मकृतं पापं नाशयति ।
सायं प्रातः प्रयुञ्जानोऽनेकजन्मकृतं पापं नाशयति ।
षट्सहस्रलक्षगायत्रीजपफलमवाप्नोति । ब्रह्महत्यासुरापान-
स्वर्णस्तेयगुरुदारगमनतत्संयोगपातकेभ्यः पूतो भवति ।
सर्वतीर्थफलमश्नुते । पतितसंभाषणात्पूतो भवति ।
पङ्क्तिशतसहस्रपावनो भवति । शिवसायुज्यमवाप्नोति । न च
पुनरावर्तते न च पुनरावर्तत इत्योंसत्यमित्युपनिषत् ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो
बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं माहं
ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणम-
स्त्वनिराकरणं मेस्तु  तदात्मनि निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति रुद्राक्षजाबालोपनिषत्समाप्ता ॥